सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ।
ह्रीवेरं मधुकं भार्ङ्गी देवदारुसकट्फलम् ॥
नागरं पुष्करं मेदा चविका चित्रकं शटी ।
विडङ्गातिविषे श्यामा हरेणुर्नीलिनी स्थिरा ॥
बिल्वाजमोजचपला दन्ती रास्ना च तैः समैः
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥
वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥

सैन्धवादिभिः समैः साध्यं तिलतैलमेरण्डतैलं वा तदनुवासनं कफरोगनुत् वर्ध्मादींश्च हन्यात् । निचुलं दीर्घपत्रो वेतसः । ह्रीवेरं वालकम् । कट्फलं सोमवल्कः । श्यामा त्रिवृत् । चपला पिप्पली ॥

साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा ।
अन्वासनं श्लेष्महरं द्रव्यैर्वा कफघातिभिः ॥
फलैरष्टगुणे चाम्ले सिद्धमन्वासनं कफे ।

बिल्वादिना वा पञ्चमूलेन साधितं तैलमनुवासनं श्लेष्महरं भवति । अथवा कफघातिभिर्द्रव्यैः शीतशिवशतपुष्पेत्यादिना शोधनादिगणे पठितैः स्नेहादष्टगुणेऽम्ले काञ्चिकादौ सिद्धं तैलमनुवासनं श्लेष्महरम् ॥

शूलानाहे तु तद्युक्तो निरूहः पटुमूत्रवान् ॥

यदा तु सकफस्य शूलमानाहश्च भवति तदा तेन कफहरद्रव्यसिद्धेन तैलेन युक्तो योग्यो निरूहः पटुना लवणेन मूत्रेण च युक्तो विधेयः ॥

पृच्छति स्म मुनिमित्यथ धीमा-
नग्निवेश इह किन्तु फलानाम् ।
बस्तिकर्मणि हितं सततं स्या-
त्स पुनर्वसुरिति प्रशशास ॥

इह कुष्ठहिता गरागरी
हितमिक्ष्वाकुफलं प्रमेहिणाम् ।
कुटजस्य फलं हृदामये
प्रवरं कोशफलं तु पाण्डुषु ॥

उदरे कृतवेधनं हितं
मदनं सर्वगदाविरोधि च ।
मधुरं सकषायतिक्तकं
तदरूक्षं सकटूष्णपिच्छिलम् ॥

कफपित्तहृदाशुकारि च
निरपायं पवनानुलोमि च ।
प्रवरं तदतः फलादिषु
स्मृतमास्थापनयोजनास्विति ॥

पृच्छतीत्यादिना फलानां मध्याद्बस्तिकर्मणि किं हितं स्यादिति । अथेत्यग्निवेशप्रश्ने । तमाग्निवेशं पुनर्वसुरिति प्रशशास । किमित्याह इहेत्यादि । उभयत्रापीहेत्यायुर्वेदे । सुबोधम् । (नि)जीमूतको देवदाली तिक्तकोशा गरागरी । प्रोक्ताखुविषहा वेणी देवताली च ताडकः । कटुकालाबुनी तुम्बी लम्बा पिण्डफला तथा । इक्ष्वाकुः क्षत्रियवरा तिक्तबीजा महाफला । कुटजफलमिन्द्रयवम् । कोशफलं धामार्गवाख्याया राजकोशातक्या फलम् । कृतवेधनं घण्टालिकाख्यायाः कोशातक्याः फलम् । तदिति मदनम् । सर्वगदाविरोधित्वे हेतुर्मधुरा-

द्विगुणत्वेन । वातादिहितत्वे च । पिच्छि-ल मार्दवापादनम् । आशु च कर्म करोतीत्याशुकारी । निरपायमयोगादिना अपाय न करोत्यतो मधुरत्वादिहेतोस्तत्र फलादिषु मदनफलादिषु शोधनादिगणपठितेषु बस्तिद्रव्येषु प्रवर श्रेष्ठमास्थापनाना योजनासु स्मृतमाचार्यै ॥

अथ मुनिवृषभे निगद्य वाक्य
स्थितवति विस्मयमाप्त्वभूव भूय ।
इदमतिगहन सहान्यशिष्यै-
रवनिगतोऽञ्जलिमग्रतो निधाय ॥

अथानन्तर मुनिवृषभे पुनर्वसौ फलकल्पनावाक्य निगद्योक्त्वा स्थितवति वाक्याद्विरतेऽग्निवेशोऽञ्जलिमग्रतो निधायावनौ निपत्य भूय पुनर्विस्मयमवाप्तवानन्यैर्भेळादिभि. शिष्यै सह । किमित्याह ॥

चित्रकर्मगुणकृद्गुरुणोक्तो
वस्तिरूर्ध्वमथ चैति न नाभे ।
शीघ्रमापतति चाशु स देहात्
सर्वत कथमपोहति दोषान् ॥

चित्रेत्यादि । गुरुणा भवता वस्तिर्विचित्रकर्मकृत् विचित्रगुणकृच्चोक्त । अथ च वस्तिर्नाभेरूर्ध्व नैति । न च बहुकाल देहे तिष्ठत्यपि तु शीघ्रमापतत्येवस्वरूप स कथ दोषानपोहतीति विज्ञापना ॥

एव विज्ञप्तो गुरु. पुनर्वसुरतमग्निवेशमित्यूचे किमित्याह ॥

रूक्षे गुरुस्तिमितमारुतवश्यमेतद्
देहस्य यद्यदिरुपाश्रितमन्तरे वा ।
दुष्टस्य तस्य जनयत्यनुलोमतां तु
वस्तिर्हिनस्ति विषमानपि रोगपूगान् ॥

देहस्य यत्किञ्चित् बहिराश्रितं कान्तिवर्णगमनग्रहणादि यच्चान्तराश्रितं धात्वादि तत् सर्व मारुतवश्य मारुतवशात् भवति । तस्य तु सर्वशरीरोपकारकरणभूतस्य वायोर्वस्तिर्दुष्टस्य सतोऽनुलोमता जनयन्विषमानपि कृच्छ्रानपि रोगपूगान् व्याधिसङ्घान् हिनस्ति ॥

शाखागता कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो
वायोः पर जन्मनि हेतुरस्ति ॥

विट्श्लेष्मपित्तादिमलाचयानां
विक्षेपसंहारकरो हि वायु ।
तस्यातिवृद्धस्य शमाय नान्य-
द्वस्ते' सम भेषजमस्ति यस्मात् ॥
शाम्यन्ति यत्नेन जितेऽनिले च
तदीरिताः पित्तकफादयोऽपि ।
तस्माच्चिकित्सार्धमिति ब्रुवन्ति
सर्वा चिकित्सामपि वस्तिमेके ॥

अपि च ये रोगाः शाखागता सन्ति ये च कोष्ठगता ये च मर्मादिजास्तेषा रोगाणा जन्मनि वायो परमन्यो हेतुर्नास्ति । विडादिमलाचयाना च वायुरेव विक्षेपसहारौ करोति यस्मात् । यस्माच तस्य वायोरतिवृद्धस्य शमायान्यत् भेषज

वस्तिसमं नास्ति । यस्माच्च तेन वस्ति नानिले वायौ जिते तदीरिता. पित्तादयोऽपि शाम्यन्ति । तस्माद्धेतोराचार्या चिकित्सार्धमिति नाम्ना वस्तिं ब्रुवन्ति । एके आचार्याः वस्तिं सर्वां चिकित्सां ब्रुवन्ति वस्तिरेव चिकित्सेत्यर्थ । शाखा रक्तादयो धातव. । तथा कोष्ठो महास्रोत' । मर्म हृदयादि । ऊर्ध्वाङ्ग शिर । अङ्गशब्देन देहपर्यायेणोर्ध्वादीना ग्रहणम् । पित्तादीत्यादिशब्देन श्लेष्मादीना ग्रहणम् । कफादय इति रक्तादीना ग्रहणम् ॥

यत पक्वाशयस्थोऽपि दोषाणामपाहरस्तकम् ।
वीर्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव ॥

यतेत्यादिनापरो हेतुर्वस्तेरतिशये । पक्वाशयस्थितोऽपि वस्तिरपाकाल नाक स्थितान् दोषान् वीर्येणादत्ते । यथा खस्थोऽर्को भूरसान् द्रव्यानादत्ते ॥

यत्तत्रौपधवीर्यं हि तदपानेन वायुना ।
पर्याप्तमचिरादेव समानं प्रतिपद्यते ॥
समानादुत्तरं चैव व्यानाख्या पवना क्रमात् ।
ते तृप्ता प्रकृतिं याता शरीरानुग्रहे स्थिता ।
प्रसन्न पित्तश्लेष्माणौ यथास्थानं निवेश्य च ।
संतर्पयन्ति परित स्थानं स्थान् भूतगुणास्तनौ

यत्तत्रेत्यादिना पूर्वोक्ते युक्ति । तत्रेति वस्तौ यदौषधानां वीर्यं तदपानाख्येन वायुना समन्तात् प्राप्तमचिरादेव वीर्यं समानाख्य प्राप्नोति । समानस्य पश्चाद्व्यानोदानप्राणा । क्रमेण पञ्च वायव इत्यौपधवीर्येण तृप्ताः प्रकृतिं स्वरूप गतास्तनौ शरीरे स्थान स्थान वायव्यान भूतगुणास्तैर्गुणैस्तर्पयन्ति परित समन्तात् । किंभूता आह । शरीरानुग्रहे स्वास्थ्यसंरक्षणे स्थिता' । किं कृत्वाह । प्रसन्न पित्तश्लेष्माणौ यथास्व स्थाने निवेश्य । तर्पयन्ति परितश्च ॥

व्यानास्तिर्यगपानोऽध प्राणश्चोर्ध्वं प्रतर्पयति ।
यथाम्बुमेघ नाडीभिर्हारिणीभिरिवोदकम् ॥

वस्ति व्यानस्तिर्यगवकर्षति । अपानश्चाध प्राण ऊर्ध्वमवकर्षति स्वाश्रयनाडीभि । यथाम्बु हरिद्धारिणीभि केदारेपूदकमपकर्षति । हारिणी केदारजलप्रचारणीत्यर्थ ॥

एवं वस्ते विनाभिव नयनैश्च सुयोजित ।
व्याप्नुवन् प्रसभं हन्ति शुक्रमूत्रानपि लक्षणं ।

एवमित्यादिना निगमनम् । वस्ति सुप्रयोजित सन् नावेर्नेत्रैर्ब्धिरिव शिराभिश्च वपुर्व्याप्नुवन् शुक्रमूत्रानप लक्षणो व्याधीन् प्रसभं हन्ति ॥

वस्तिस्तस्मात् सर्वकर्मप्रधान
सर्वातङ्कान् हन्ति निःशेषतश्च ।
स्रोतास्यन्त शोधयित्वा च कुर्या-
दोजस्तेज शुक्रमेधाग्निदीप्तिम् ॥

इति कल्पस्थाने पञ्चमोऽध्याय

द्विगुणत्वेन । वातादिहितत्वे च । पिच्छिल मार्दवापादनम् । आशु स्व कर्म करोतीत्याशुकारी । निरपायमयोगादिना अपाय न करोत्यतो मधुरत्वादिहेतोस्तत्र फलादिषु मदनफलादिषु शोधनादिगणपठितेषु वस्तिद्रव्येषु प्रवर श्रेष्ठमास्थापनाना योजना सु स्मृतमाचार्यैः ॥

अथ मुनिवृषभे निगद्य वाक्य
स्थितवति विज्ञपयाम्बभूव भूय ।
इदमतिगहन सहान्यशिष्यै-
रवनिगतोऽञ्जलिमग्रतो निधाय ॥

अथानन्तर मुनिवृषभे पुनर्वसौ फलकल्पनावाक्य निगद्योक्त्वा स्थितवति वाक्याद्विरतेऽग्निवेशोऽञ्जलिमग्रतो निधायावनौ निपत्य भूय पुनर्विज्ञपयाबभूवान्यैर्भेडादिभिः शिष्यै सह । किमित्याह ॥

चित्रकर्मगुणकृद्गुरुणोक्तो
वस्तिरूर्ध्वमथ चैति न नाभे ।
शीघ्रमापतति चानु स देहात्
सर्वत कथमपोहति दोषान् ॥

चित्रेत्यादि । गुरुणा भवता वस्तिर्विचित्रकर्मकृत् विचित्रगुणकृच्चोक्त । अथ च वस्तिर्नाभेरूर्ध्वं नैति । न च बहुकाल देहे तिष्ठत्यपि तु शीघ्रमापतत्येवस्वरूप स कथ दोषानपोहतीति विज्ञापना ॥

एव विज्ञप्तो गुरु. पुनर्वसुस्तमग्निवेशमित्यूचे किमित्याह ॥

ऊचे गुरुस्तिमितमारुतवश्यमेतत्
देहस्य यद्बहिरुपाश्रितमन्तरे वा ।
दुष्टस्य तस्य जनयन्ननुलोमतां तु
वस्तिर्हिनस्ति विषमानपि रोगपूगान् ॥

देहस्य यत्किञ्चित् बहिराश्रितं कान्तिवर्णगमनग्रहणादि यच्चान्तराश्रितं धात्वादि तत् सर्वं मारुतवश्य वातवशात् भवति । तस्य तु सर्वशरीरोपकारकरणभूतस्य वायोर्वस्तिर्दुष्टस्य सतोऽनुलोमता जनयन्विषमानपि कृच्छ्रानपि रोगपूगान् व्याधिसङ्घान् हिनस्ति ॥

शाखागता कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषा न तु कश्चिदन्यो
वायो. पर जन्मनि हेतुरस्ति ॥

विट्श्लेष्मपित्तादिमलाचयानां
विक्षेपसहारकरो हि वायु ।
तस्यातिवृद्धस्य शमाय नान्य-
द्वस्ते' सम भेषजमस्ति यस्मात् ॥

शाम्यन्ति यत्नेन जितेऽनिले च
तदीरिता. पित्तकफादयोऽपि ।
तस्माच्चिकित्सार्धमिति ब्रुवन्ति
सर्वां चिकित्सामपि वस्तिमेके ॥

*अपि च ये रोगा शाखागता* सन्ति ये च कोष्ठगता ये च मर्मादिजास्तेषा रोगाणा जन्मनि वायो. परमन्यो हेतुर्नास्ति । विडादिमलाचयाना च वायुरेव विक्षेपसहारौ करोति यस्मात् । यस्माच्च तस्य वायोरतिवृद्धस्य शमायान्यत् भेषज

तस्मात् सर्वक्रमाणां वमनादीनां बस्तिं प्रधान निर्दोषतश्च सर्वानातङ्कान् हन्ति । अतः स्रोतांस्यणूनि शोधयित्वा ओजःप्रभृतीश्च कुर्यात् ॥

इतीन्दुविरचितायामष्टाङ्गसमहव्याख्यायां कल्पस्थाने पञ्चमोऽध्यायः ॥

---

# षष्ठोऽध्यायः ।

---

बस्तीनां कल्पना प्रदर्शयित्वा तेषामेवोपयोगे व्यापदस्तत्साधनं च प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो बस्तिव्यापत्सिद्धिं व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षयः ॥

विबन्धगौरवाध्मानशिरोरुग्वाहनार्ध्वगाः ।
कुक्षिशूलाङ्गरुग्भिन्नमाहृत्पीडास्तनमवाः ॥
अयोगादतियोगाच्च बस्तेः स्युष्षड्दशापदः ।

बस्तरयोगाद्विबन्धादयः षड्दशापदो व्यापदः स्युः । तस्यैवातियोगात् कुक्षिशूलादयः षड्दशापदः स्युः । एताश्चापदः प्रधाना कीर्तिताः ... हि पृथगेव वक्ष्यमाणत्वात् । वाहनं मनाद्विका । ऊर्ध्वगाख्या व्यापदत्र बस्तिर्मुखनासिकाभिरेतीति । कर्तनं नाभ्यादीनां कर्तनमिव । स्रवोऽसृगादिपरिस्रवः ॥

अस्निग्धेत्यादिना प्रच्छाद्य सर्वपं शिरःश्लेष्मान्तात् प्रन्थनं षण्णामयोगापदां क्रमेण हेत्वादिरुच्यते । बस्तिरित्युष्णेत्यादि क्रमेणिमिषग्जितमित्यवसानेनातियोगापदाम् ॥

अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ॥
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ।
बस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ॥
करोति वातविण्मूत्रविबन्धमतिदारुणम् ।
नाभिबस्तिरुजा दाहं हृल्लेपं श्वयथुं गुदे ॥
कण्डू गण्डानि वैवर्ण्यमरतिं वह्निमार्दवम् ।

तत्रास्निग्धादिगुणस्य पुंसः शीतादिगुणो बस्तिर्दोषं संक्षोभ्य दुर्बलत्वाच्छीतवीर्यत्वात् स्तु...पमनिर्हरन्वातादीनां विबन्धमतिदारुणं करोति नाभिरुजादिकं च । अल्पद्रव्यमात्रः स्नेहाम्लमूत्रादिवर्जितः ॥

क्वाथद्वयं प्राग्विहितं म यदोपेऽतिसारिणि ।
उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ।
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ॥

प्राक्चीकित्सिते मध्यदोषेऽतिसारिणि क्वाथद्वयं विहितं प्रमथ्याख्यं मागधिकादीनां जलजलदादीनां च तस्मात् क्वाथद्वयाद्दोषाद्यपेक्षयैकस्य क्वाथस्य तत्रायोगस्य षड्विधत्वाद्वाभिशूलादिके पानं प्रशस्यते । फलवर्त्यादिकं च प्रशस्यते । कालं ज्ञात्वा विरेचनयोग्ये विरेचनं हितम् ॥

बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ।
सुराविण्मूत्रवान् बस्तिः समाकृष्यस्तमानयेत्

बिल्वमूलादिमान् वर्ति प्राकपेप्यैर्यवान्यादिभिर्वस्तिकल्पोक्तैर्युक्तवमयोगिन वस्तिमानयेत् । विट् च मूत्र च प्राणिनामय । इति विबन्ध उक्त ॥

सशेपाम इत्यादिना गौरवमन्यते ॥

सशेपामे निरूहेण मृदुना दोप ईरित ।
मूर्च्छयत्यनिल मार्ग रुणद्ध्यग्नि हिनस्ति च ॥
गौरवाध्मानहृच्छूलदाहसमोहवेष्टनम् ।
तत्र कुर्यादुपचरेत्त रूक्षस्वेदपाचनैः ॥

सशेपामेऽनुत्पन्नविरामके पुरुषे मृदुना निरूहेण दोष ईरितोऽनिल वायु मूर्छयति ज्वलयति मार्ग च रुणद्धि अग्नि च हिनस्ति ततोऽनन्तर गौरवादिक कुर्यात् । तमातुर रूक्षादिभिरुपचरेत् ॥

पिप्पलीकत्तृणोशीरदारुमूर्वाशृत जलम् ।
पिबेत् सौवर्चलोन्मिश्र दीपन हृद्विशोधनम् ॥
वचानागरषड्ग्रो वा दधिमण्डेन मूर्छिता ।
पेया प्रसन्नया वा स्युररिष्टेनासवेन वा ॥

तत्र च पिप्पल्यादिभि शृत जल सौवर्चलोन्मिश्र पिबेत । तद्धि दीपन शोधन च । अथवा वचादयो दधिमण्डेन मस्तुना मूर्छिता आलोडिता प्रसन्नया वा पेया स्यु । आसवेन वारिष्टेन वा पेया स्यु ॥

दारुत्रिकटुक पथ्यां पलाश चित्रक शटीम् ।
पिष्ट्वा कुष्ठ च मूत्रेण पिबेत् क्षाराश्च दीपनान् ।
वस्तिमस्य विदध्याच्च समूत्र दाशमूलिकम् ।

दार्वादिक च मूत्रेण पिष्ट पिबेत् ।
चिकित्सितोक्ताश्च दीपनाश्च क्षारान् पिबेत् ।
अस्य चायोगिनो दशमूलनिर्वृत्त वस्ति समूत्र विदध्यादित्युक्त गौरवम् ॥

युक्त इत्यादिनाध्मानमुच्यते ॥

युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम्
सविमार्गोऽनिल कुर्यादाध्मान मर्मपीडनम्
विदाह गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥
रुणद्धि हृदय शूलैरितश्चेतश्च धावति ।

दोषाढ्यादिके पुरुषेऽल्पवीर्या वस्तिर्युक्तो दोषैरावृतत्वाद्रुद्धमार्ग सन् समीरण वात रुन्ध्यात् । सोऽनिल समीरणो रुद्धमार्गत्वाद्विमार्गग आध्मानादीन् कुर्यात् । इतश्चेतश्च कोष्ठेऽनिलो धावति ॥

स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्ति प्रयोजयेत् ।
विल्वादिश्च निरूह स्यात् पीलुसर्षपमूत्रवान्
सरलामरदारुभ्या साधित चानुवासनम् ।

तत्रायोगे स्वभ्यक्तस्विन्नगात्रस्य वर्ति प्रयोजयेत् । वस्तिकल्पोक्तश्च बिल्वादिर्निरूह पील्वादिमांस्तत्र स्यात् । सरलदेवदारुभ्या साधितमनुवासन स्यात । अर्थात्तैलमित्युक्तमाध्मानम् ॥

बहुदोषइत्यादिना शिरोरुगुच्यते ॥

बहुदोषेऽग्नले क्रूरकोष्ठे वस्तिस्तनुर्मृदु ।

पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ॥
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ।
अपानः पवनो बस्तिं तमाश्वेवापकर्षति ॥

तस्य च मरणं रक्षन् पाण्यादिभिर्गलापीडं कुर्यात् । एवं हि प्राणस्योदानस्य च निरोधादपानः सुप्रसिद्धतरमार्गः सन् बस्तिमाश्वेवापकर्षति ॥

कुष्ठक्रमुककल्कं च पाययेदम्लसंयुतम् ।
औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च बस्तिसोम्यानुलोमयेत् ॥
गोमूत्रेण त्रिवृत्पथ्याकल्कं वापोनुलोऽमनम् ।

तं च कुष्ठक्रमुकयोः कल्कमम्लेन काञ्जिकादिना पाययेत् । क्रमुकः लोध्रम् । स कल्कोऽस्यातुरस्यौष्ण्यादिना बस्तिमूर्ध्वं प्रवर्तमानमधोऽनुलोमयेत् । अथवा त्रिवृत्पथ्याकल्कं गोमूत्रेण पाययेत् ॥

पक्वाशयस्थिते खिन्ने निरूहो दाशमूलिकः ॥
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ।
बस्तिर्गोमूत्रसिद्धैर्वा साम्रुतावशपल्लवः ॥
पूतीकरञ्जत्वक्पत्रपर्डदेवाह्वरोहिषैः ।
सतैलगुळसिन्धूत्थोविरेकौषधकल्कवान् ॥

पक्वाशयस्थे बस्तौ खिन्ने पुरुषे दाशमूलिको निरूहो विधेयः । यवादिभिश्च मूत्रसाधितैर्बस्तिर्विधेयः । अथवा पूतीकरञ्जादिभिरम्रुतावशपल्लवाभ्यां युक्तः सतैलादिको विरेचनद्रव्यकल्कवान् बस्तिर्विधेयः ॥

बिल्वादिपञ्चमूलेन सिद्धो बस्तिरुरःस्थिते ।
शिरस्थे नावनं धूमं प्रच्छाद्य सर्षपैः शिरः ॥

उरःस्थिते बस्तौ बिल्वादिपञ्चमूलेन सिद्धो बस्तिर्विधेयः । शिरःप्राप्ते बस्तौ नावनादिकम् । इत्युक्ताः षड्योगापदः ॥

बस्तिरित्यादिनातियोगापद उच्यन्ते ॥

बस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा
अल्पदोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ॥
अतियोगत्वमापन्नः कुक्षिशूलकरो भवेत् ।
विरेचनातियोगेन स तुल्याकृतिसाधनः ॥

उष्णादिगुणवान् बस्तिः प्रयुक्तोऽतिस्वेदितस्य वा प्रयुक्तः अल्पदोषादिके वा पुनः पुनः प्रयुक्तोऽतियोगमापन्नः सन् कुक्षिरुजाकरो भवेत् । सोऽतियोगो विरेचनातियोगेन तुल्यलक्षणस्तुल्यसाधनश्च ॥

पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकोत्पले ।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने ॥
द्राक्षायाः पक्वलोष्टस्य प्रसादे मधुकस्य वा ।
विनीय सघृतं बस्तिं युञ्ज्याद्दाहेऽतियोगजे ॥

बस्त्यतियोगजदाहे पृश्निपर्ण्यादिकं पिष्ट्वा क्षीरादीनामन्यतमे विनीय निक्षिप्य सघृतं बस्तिं युञ्ज्यादित्युक्तं कुक्षिशूलम् ॥

स्नेहेत्यादिनाङ्गरुगुच्यते ॥

स्नेहस्वेदैरसंपाद्य गुरुतीक्ष्णोऽतिमात्रकः ।
दुःस्थिताय प्रणिहितो बस्तिर्दुःशोधिताय वा ॥

अस्य चातुरस्य स वातपित्ते नाभ्यादीन् मुहुर्मुहुः कृन्तत. । वस्तेश्च मूत्राधारस्य निर्हरणादिवर्णादिगुणमुद्धान भवेत ॥

स्वादुशीतौषधैस्तत्र पयस्येक्ष्वादिभि शृतः ॥
यष्ट्याह्वतिलकल्केनवस्तिःस्यात्क्षीरभोजिन
ससर्जरसयष्ट्याह्व जिङ्गिणीकर्दमाञ्जनम् ।
विनीय दुग्धे वस्ति. स्याद्रक्ताम्लरसभोजिन
पिच्छिलश्च हितो वस्तिः स्नेहश्च मधुरैः शृत.

तत्र पयस्यादिभिः स्वादुशीतै शृतो यष्ट्याह्वतिलयो. कल्केन युक्तो वस्तिः क्षीरभोजिन पुरुषस्य स्यात् । जिङ्गिण्यादिक ससर्जरसादिदुग्धे विनीय वस्तिः स्यात् । अम्लोऽक्ट मासरस यो भुङ्क्ते तस्य पिच्छिलो वस्ति कल्पोक्तो वस्तिश्च हितः । मधुरैश्च शृत स्नेहोऽनुवासने हितः । इत्युक्त कर्तनम् ॥

वस्तिरित्यादिना परिस्रवं वर्ण्यते ॥

वस्ति क्षाराम्लतीक्ष्णोष्णलवण पैत्तिकस्य वा
गुद लिखन् दहन् क्षिण्वन् करोत्यस्रपरिस्रवम्
स विदग्धं स्रवत्यस्रं वर्ण पित्त च भूरिभि ॥
बहुशश्चातियोगेन मोह गच्छति चासकृत् ॥

अथवा पैत्तिकस्य क्षारादिगुणो वस्तिर्गुददाहादिकं कुर्वन्नस्रपरिस्रव करोति । स परिस्रववान् विदग्धमस्रं बहुभिर्वर्णैः स्रवति । पित्त च तथाविधमनेकवर्ण स्रवत्यतियोगेन । असकृच्चासौ मोहं गच्छति ॥

तत्रार्द्रै. शल्मलीपत्रै क्षुण्णराज पयः शृतम् ।
पूर्तं घृतान्वित वस्ति दद्यादन्यांश्च पिच्छिलान्
वटादिपल्लवेष्वेव कल्पो यवतिलेषु च ।
सुवर्चलोपोदकयोः कच्छुदारे च शस्यते ॥

तत्रार्द्रैः शल्मलीपत्रैः शृतं पयः पूतं घृतान्वित च वस्ति दद्यात् । अन्याश्च पूर्वोक्तान् पिच्छिलान् वस्तीन् दद्यात् । एष च शल्मलीपत्रकल्पो वटादिपल्लवेषु यवतिलाना च क्लेष्वपीष्ट सुवर्चलादीना च शस्यते ॥

गुदे च शीतमधुरान् कुर्यात् सेकप्रलेपनान् ।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते ॥

गुदे च शीतादिगुणान् सेकान् प्रलेपाश्च कुर्यात् । अत्र च रक्तपित्तघ्नी क्रिया शस्यते रक्तातिसारघ्नी च ॥

दाहादिषु त्रिवृत्कल्क मृद्वीकावारिणा पिबेत्
तद्धि पित्तशकृद्वातान्हत्वादाहादिकाञ्जयेत् ॥

दाहादिषु द्राक्षामृदितवारिणा त्रिवृत्कल्क पिबेत् । तत् त्रिवृत्कल्कयुक्तं मृद्वीकावारि पित्तादीन् हत्वा दाहादिकान् जयेत् ॥

विशुद्धश्च पिबेच्छीता यवागूं शर्करायुताम् ।
युञ्ज्याद्वातिविरिक्तस्यक्षीणविट्कस्यभोजनम्
माषयूषेण कुल्माषान् पान दध्यथवा सुराम् ॥

तेन च विशुद्धो यवागू शर्करायुता पिबेत् । अथवा योऽतिविरिक्ततया क्षीणविट्कस्तस्य [illegible] भोजनं युञ्ज्यात् । कुल्माषान् वा [illegible] माष [illegible]

अस्य चातुरस्य ते वातपित्ते नाभ्यादीन् मुहुर्मुहुः कृन्ततः। वस्तेश्च गुदाधारस्य निर्लेखनाद्विवर्णादिगुणमुत्थानं भवेत् ॥

स्वादुशीतौषधैस्तत्र पयस्येक्ष्वादिभिः शृतः ॥
यष्ट्याह्वतिलकल्केन वस्तिः स्यात्क्षीरभोजिनः
ससर्जरसयष्ट्याह्वजिङ्गिणीकर्दमाञ्जनम् ।
विनीय दुग्धे वस्तिः स्याच्छक्ताम्लरसभोजिनः
पिच्छिलश्च हितो वस्तिः स्नेहश्च मधुरैः शृतः

तत्र पयस्यादिभिः स्वादुशीतैः शृतो यष्ट्याह्वतिलयोः कल्केन युक्तो वस्तिः क्षीरभोजिनः पुरुषस्य स्यात् । जिङ्गिण्यादिकं ससर्जरसादि दुग्धे विनीय वस्तिः स्यात् । अम्लोऽकटमांसरसं यो भुङ्क्ते तस्य पिच्छिलो वस्तिः कल्पोक्तो वस्तिश्च हितः । मधुरैश्च शृतः स्नेहोऽनुवासने हितः । इत्युक्तं कर्तनम् ॥

वस्तिरित्यादिना परिस्रवं उच्यते ॥

वस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य तु
गुदं लिखन् दहन् क्षिण्वन् करोत्यस्रपरिस्रवम्
स विदग्धः स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः ॥
बहुशश्चातियोगेन मोहं गच्छति चासकृत् ॥

अथवा पैत्तिकस्य क्षारादिगुणो वस्तिर्गुददाहादिकं कुर्वन्नस्रपरिस्रवं करोति । स परिस्रववान् विदग्धमस्रं बहुभिर्वर्णैः स्रवति । पित्तं च तथाविधमनेकवर्णं स्रवत्यतियोगेन । असकृच्चासौ मोहं गच्छति ॥

तत्रार्द्रैः शल्मलीपत्रैः क्षुण्णराजपयः शृतम् ।
पूतं घृतान्वितं वस्तिं दद्यादन्यांश्च पिच्छिलान्
वटादिपल्लवेष्वेव कल्पो यवतिलेषु च ।
सुवर्चलोपोदकयोः कच्छुदारे च शस्यते ॥

तत्रार्द्रैः शल्मलीपत्रैः शृतं पयः पूतं घृतान्वितं च वस्तिं दद्यात् । अन्यांश्च पूर्वोक्तान् पिच्छिलान् वस्तीन् दद्यात् । एष च शल्मलीपत्रकल्पो वटादिपल्लवेषु यवतिलानां पल्लवेष्वपीष्टः सुवर्चलादीनां च शस्यते ॥

गुदे च शीतमधुरान् कुर्यात् सेकप्रलेपनान् ।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते ॥

गुदे च शीतादिगुणान् सेकान् प्रलेपांश्च कुर्यात् । अत्र च रक्तपित्तघ्नी क्रिया शस्यते रक्तातिसारघ्नी च ॥

दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत्
तद्धि पित्तशकृद्वातान्हत्वा दाहादिकाञ्जयेत् ॥

दाहादिषु द्राक्षामृदितवारिणा त्रिवृत्कल्कं पिबेत् । तत् त्रिवृत्कल्कयुक्तं मृद्वीकावारि पित्तादीन् हत्वा दाहादिकान् जयेत् ॥

विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।
युञ्ज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम्
माषयूषेण कुल्माषान् पानं दध्यथवा सुराम् ॥

तेन च विशुद्धो यवागूं शर्करायुतां पिबेत् । अथवा योऽतिविरिक्ततया क्षीणविट्कस्तस्य माषयूषेण भोजनं युञ्ज्यात् । कुल्माषान् वा युञ्ज्यात् । कुल्माषः खिन्नमसुरम् ।

शकृता वायुना वामे तेन वर्चसि वानिले ।
संसृष्टेऽन्तरपानं स्यात् कट्वम्ललवणैर्युतम् ॥

आमप्रधाने शकृति शकृदामे अन्तरपानकं मुखयोग्यं कट्वादिगुणद्रव्ययुक्तम् । वायुना वा युक्ते प्रधाने आमे तदेव । मेन चामेन युक्ते प्रधाने वर्चसि तदेव । तेन वा मेन युक्ते प्रधानेऽनिले तदेव ॥

पित्तेनामेऽसृजा तद्वत् तयोरामेन वा पुनः ।
संसृष्टयोर्भवेत् पानं सकटुस्वादुतिक्तकम् ॥

पित्तेन युक्ते प्रधाने आमे तद्वत् । तद्वदिति कट्वम्ललवणैर्युक्तमन्तरपानम् । असृजा युक्ते प्रधाने आमे तद्वदेव । तयोः पित्तासृजोरामेन संसृष्टयोः सकटुस्वादुतिक्तकं पानं भवेत् । तेन पित्तप्रधानमामपित्तमुक्तम् । रक्तप्रधानं चामरक्तम् ॥

तथामे कफसंसृष्टे कषायकटुतिक्तकम् ।
आमेन तु कफे युक्ते कषायलवणोषणम् ॥

कफसंसृष्टे प्रधाने आमे कषायादिगुणद्रव्ययुक्तमन्तरपानम् । आमेन युक्ते प्रधाने कफे कषायलवणोषणमन्तरपानम् ॥

वातेन विशि पित्ते वा विट्पित्तास्रैस्तथानिले
स्यात् कषायाम्लमधुरः संसृष्टे वस्तिरुत्तमः ॥
वस्तिर्वातेन रक्ते तु कार्यः स्वाद्वम्लतिक्तकः ।

वातेन संसृष्टे प्रधाने शकृति कषायादिगुणो वस्तिरुत्तमः स्यात् । वातेन संसृष्टे प्रधाने [illegible] ड[illegible] च संसृष्टे प्रधाने स एव । पित्तेन च संसृष्टे प्रधानेऽनिले स एव । अस्रेण च संसृष्टे प्रधानेऽनिले स एव । वातेन संसृष्टे प्रधाने रक्ते स्वाद्वादिगुणो वस्तिः कार्यः ॥

शकृच्छोणितयोः पित्तशकृतोरस्रपित्तयोः ।
वस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः ॥

शकृच्छोणितयोरन्योन्यसंसर्गे शकृत्प्राधान्ये वा शोणितप्राधान्ये वा कषायादिगुणो वस्तिः कार्यः । एवं पित्तशकृतोरन्योन्यसंसर्गे पित्तप्राधान्ये शकृत्प्राधान्ये च कषायादिगुणः । रक्तपित्तयोरपि रक्तप्राधान्ये पित्तप्राधान्ये च ॥

कफेन विशि पित्ते वा कफे विट्पित्तशोणिते
कटुतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥

कफेन युक्ते प्रधाने शकृति कट्वादिगुणो वस्तिरुत्तमः स्यात् । कफेन संसृष्टे पित्ते स एव । विशा पित्तेन रक्तेन च संसृष्टे प्रधाने कफे स एव ॥

मधुरोषणतिक्तस्तु रक्ते कफविमूर्छिते ।
मारुते कफसंसृष्टे कट्वम्ललवणो भवेत् ॥
स्वाद्वस्तिः कटुतिक्ताम्लः संसृष्टे वायुना कफे

कफेन विमूर्छिते संसृष्टे प्रधाने रक्ते मधुरादिगुणो वस्तिः । कफेन संसृष्टे मारुते [illegible] वस्तिर्भवेत् । वायुना संसृष्टे [illegible] वस्तिः स्यात् ।

त्रिवृत्तु पञ्चपञ्चयोगानेवमेव विकल्पयेत् ॥
युक्तिश्चैषातिसारोक्ता सर्वरोगेष्वपिस्मृता ।

अनया द्विससर्गयुक्त्या त्र्यादिससर्गेष्वपि यथास्व त्र्यादिसङ्ख्यायोगान् विकल्पयेत् । न केवलमतिसारेष्वेवैतद्यथाविधिविषय रसयोजन बोद्धव्य यावत् सर्वरोगेष्वपि आमादिकृतेष्वेतदेव सयोजन यथाविषय बोद्धव्यम् ॥

युगपत् षडस पण्णा ससर्गे पाचन भवेत् ।
निरामाणा तु पञ्चाना वस्ति षडसिको हितः

सर्वेषु वातिसारादिषु रोगेषु पण्णामामादीना युगपत् षट्त्रिंश यथोक्त पाचनमिष्यते । यदा त्वामादिना जाताना शकृदादीना पञ्चाना युगपत् ससर्गस्तदा षड्रसयुक्त एव वस्तिः ॥

उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वच ।
शङ्ख सर्जरस लाक्षा कर्तृण च पलाशिकम् ॥
पिष्ट्वा तैः सर्पिष प्रस्थ क्षीरद्विगुणित पचेत्
अतीसारेषु सर्वेषु पेयमेतद्यथाबलम् ॥

उदुम्बरशलाटवादीना क्षीरद्विप्रस्थेन युक्त सर्पिष प्रस्थ विपचेत् । मात्रया यथाबल पेय सर्वेष्वतिसारेषु । शलादुरभिनव फलम् । त्वकशब्देन जम्ब्वादीना सब च । कर्तृण भूतीकम् ॥

कच्छुरातरणीबिल्वसमङ्गारक्तमूलिभि ।
मसूराश्वत्थशुङ्गैश्च यवागू स्याज्जले शृतैः ॥
बालोदुम्बरकट्वङ्गसमङ्गाप्लक्षपल्लवैः ।
मसूरधातकीपुष्पबलाभिश्च तथा भवेत् ॥

कच्छुरादिभिर्जले शृतैर्यवागू स्यात् । कच्छुरा दुरालभा । समङ्गा मञ्जिष्ठा । रक्तमूली शमीपर्णया । समङ्गाबालोदुम्बरादिभिश्च यवागूर्भवेत् । तथेति जले शृतैः । कट्वङ्ग श्योनाक ॥

उपसहरन्नाह

नानाप्रकारा जायन्ते व्यापदो वस्तिविभ्रमात्
यथायथ यथावस्थ तासा कुर्वीत साधनम् ॥
इति कल्पस्थाने षष्ठोऽध्यायः ॥

वस्तिविभ्रमादसम्यग्योगान्नानाप्रकारा व्यापदो जायन्ते । तासा व्यापदा यथायथ यथास्वरूप यथावस्थ च साधन चिकित्सित कुर्वीतेति ॥

इतीन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्याया कल्पस्थाने षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः ।

आस्थापनाना व्यापदस्तत्साधन चोक्त्वा क्रमप्राप्ताना स्नेहादिवस्तीनामसम्यग्योगे व्यापद साधन च प्रदर्शयितुमध्याय आरभ्यते ॥

अथात स्नेहादिव्यापत्सिद्धि व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षय ॥

स्नेहवस्तौ मरुत्पित्तकफात्याशविडावृते ।
अभुक्ते भुक्तपाय्यामदत्तेऽष्टौ व्यापदः स्मृता ॥

स्नेहवस्तौ मरुदादिपथ्यकावृते अभुक्तादित्रयदत्ते चेत्यष्टधा स्नेहवस्तेर्व्यापदः । अत्याशोऽतिभोजनम् ॥

शीत इत्यादिना क्रमणावरणा उच्यन्ते ॥

शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्ण कफे मृदु
अतिभुक्ते गुरुर्वर्चे सचयेल्पबलस्तथा ॥
दत्तस्तैरावृत स्नेहो नायात्यभिभवादपि ।

वातेऽधिके शीतोऽल्पो वा दत्तो वातेनावृतत्वान्नायाति । पित्तेऽधिकेऽत्युष्णो दत्त पित्तावृतत्वान्नायाति । कफेऽधिके मृदु स्नेहवस्ति, कफावृतत्वान्नायाति । अतिभुक्ते गुरु स्नेहवस्तिरन्नावृतत्वान्नायाति । वर्चे सचयेऽल्पबल स्नेहवस्तिर्विडावृतत्वान्नायाति । सम्यक्प्रयुक्तोऽपि च स्नेहवस्तिर्मारुतादिष्वधिकेषु प्रयुक्तस्तैरभिभूतत्वान्नायाति ॥

स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनै । ।
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ॥
स्निग्धाम्ललवणोष्णैस्त रास्नापीतद्रुतैलिकै
सौवीरकसुराकोलकुलत्थयवसाधितै ॥
निरूहैर्निर्हरेत सम्यक समूत्रै पाञ्चमूलिकै ।
ताभ्यामेव च तैलाभ्या साय भुक्तेऽनुवासयेत्

स्तम्भादिक वातावृतस्नेहलक्षणम् । त स्नेह स्निग्धादिगुणै पाञ्चमूलिकैर्निर्हरेत । रास्नातैलादियुक्तैश्च । पीतद्रुरत्र सरळ । कोल बदरम । ताभ्यामेव तैलाभ्या रास्नापीतद्रुतैलाभ्या साय भुक्ते भोजने कृतेऽनुवासयेत् ॥

तृड्दाहरागसमोहवैवर्ण्यतमकज्वरै ।
विद्यात् पित्तावृत स्वादुतिक्तैस्तं वस्तिभिर्हरेत्

तृडादि पित्तावृतलक्षणम । त स्नेह स्वाद्वादिगुणैर्वस्तिभिर्हरेत् ॥

तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवै ।
समूर्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम्
कषायतिक्तकटुकै सुरामूत्रोपसाधितै ।
फलतैलयुतै साम्लैर्वस्तिभिस्त विनिर्हरेत् ।

तन्द्रादिक श्लेष्मावृतलक्षणम् । त स्नेह कषायादिगुणैर्वस्तिभिर्हरेत ॥

छर्दिमूर्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ।
आमलिङ्गै सदाहैस्त विद्यादत्यशनावृतम् ॥
कटूना लवणाना च क्वाथैश्चूर्णैश्च पाचनम् ।
मृदुर्विरेक सर्व च तत्रामविहित हितम् ॥

छर्द्यादिकमत्यशनावृतलक्षणम । आमलिङ्गानि स्रोतोरोधादीनि सूत्रोक्तानि। तत्र कटवादिगुणाना द्रव्याणा क्वाथैश्चूर्णैश्च पाचनम । मृदुर्विरेकश्च शस्यते । सर्वमामविहितमामातिसाराद्युक्तम ॥

विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहै ।
स्नेह विडावृत ज्ञात्वा स्नेहस्वेदै सवस्तिभि
श्यामाबिल्वादिसिद्धैश्च निरूहै सानुवासनै ।
निर्हरेद्विधिना सम्यगुदावर्तहरेण च ॥

विट्सङ्गादिना विडावृतलक्षणम् । त स्नेह स्नेहस्वेदादिभिर्निर्हरेदुदावर्तोक्तेन च विधिना सम्यग्योजनया निर्हरेदित्यावरण ॥

अभुक्ते शूनपायोर्वा पेयामात्राशितस्य वा ।
गुदे प्रणिहित स्नेहो वेगाद्धावत्यनावृत ॥
ऊर्ध्वकाय तत. कण्ठादूर्ध्वेभ्य खेभ्य एत्यपि

अभुक्ते दत्त स्नेह पेयामात्रेणैव भुक्तस्य वा दत्त शूनपायोर्वा प्रणिहितो वेगादूर्ध्वकाय धावत्यन्नाद्यावारकाभावात् । स त कण्ठादूर्ध्वेभ्य खेभ्यो नासादिभ्य प्रत्यागच्छति ॥

मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ॥
तत्सिद्धतैलो देय स्यान्निरूह सानुवासन ।
कण्ठादागच्छतस्तम्भकण्ठग्रहविरेचनै ॥
छर्दिघ्नीभि' क्रियाभिश्च तस्य कुर्यान्निवर्तनम् ।

तत्र मूत्रादिसिद्धो निरूहो यवादिमांश्च तत्सिद्धेन मूत्रादिसिद्धेन तैलेन युक्तो देय स्यात् । अनुवासनश्च तथाविधो देय स्यात् । तस्य चोर्ध्वप्रवृत्तस्य स्नेहस्य कण्ठादागच्छतो निवर्तनमधोनयन स्तम्भादिभि कुर्यात् ॥

आमदत्त उच्यते ॥

नापक्व प्रणयेत् स्नेह गुद स ह्युपलिम्पति ।
तत. कुर्यात् सरुग्मोहकण्डूशोफान् क्रियात्र च
तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे श्रृतम् ।

अपक्व स्नेह पायौ न प्रणयेत् । स ह्यपक्व प्रणिहित आत्मना गुदमुपलिम्पति । स चामदत्तो रुगादीन कुर्यात् । अत्र च क्रिया चिकित्सा भवति । किमित्याह तीक्ष्ण इत्यादि सुबोधम् । इत्युक्ता अष्टौ व्यापद. ॥

प्रसङ्गेनोच्यते ॥

ह्रस्व दीर्घ तनु स्थूल जीर्ण शिथिलबन्धनम्
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत् ।
अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्त्रवा ॥
गुदपीडा गतिर्जिह्मा तेषा दोषा यथाक्रमम् ।

ह्रस्व इत्यादि । सर्वत्र च वस्तौ ह्रस्वादिगुण नेत्र वर्जयेत् अप्राप्त्यादिदोषभयात् । ह्रस्वे नेत्रे वस्ते स्थानाप्राप्ति । दीर्घेऽतत्यतिगमनमौषधस्य । तनौ नेत्रेऽन्त.क्षोभ । स्थूले मार्गकर्षणम् । जीर्णे जर्जरे कर्कशत्वात् गुदादिक्षणनम् । शिथिलबन्धने बहिरौषधस्य स्रव । पार्श्वच्छिद्रे नेत्रे गुदपीडा । वक्रे जिह्मा अस्पष्टा गतिरौषधस्येति यथाक्रमम् ॥

मासलस्निग्धविषमजालवत्स्थूलवातला ।
छिन्न क्लिन्नश्च तानष्टौ बस्तीन् कर्मसु वर्जयेत
गतिवैषम्यदौर्गन्ध्यजिह्मत्वस्रुतिदुर्ग्रहा: ।
फेनिलच्युत्यधार्यत्व बस्ते स्युर्बस्तिदोषत' ॥

मासलादीन् बस्तीन् नेत्रमूलयोज्यानौषधाधारानष्टौ बस्तिकर्मणि वर्जयेत् । यतो मासलत्वादिरवाद्बस्तिदोषतो बस्तेरौषधस्य गतिवैषम्यादय स्यु । मासलत्वेन बस्तेरौषधस्य विषमा गति स्निग्धत्वेन बस्तिचर्मण औषधस्य दौर्गन्ध्यम् । विषमत्वेन बस्तेर्घनत्वम् । तनुत्वेनौषधस्य जिह्मत्व सन्धादनिर्गमनम् । जालवत्त्वेन सिराजालवत्त्वेन स्रुति । स्थूलत्वेन बस्तेश्चर्मण औषधस्य दु.खेन ग्रहणम् । वातलत्वेन चर्मण औषधस्य

फेनिलत्व छिन्नत्वेनौषधस्य च्युति । छिन्नत्वेन वस्तेरौषध धारयितुमशक्यत्वमिति ॥

उच्चैरत्यवाकच्छीर्ष न्युब्ज सकुचित स्थितम्
उत्तान दक्षिण पार्श्व सप्त शय्या परित्यजेत्
मूत्राघातोऽतिसमाप्ति स्वाप्ति साधुनागतिः ।
आश्वागतिर्मरुत्कोपस्तृप्तिः पक्काशयस्य च ॥
तद्दोषा स्युर्विधातव्य यथौपयिकमत्र च ।

उच्चैरित्यादिना सप्त शय्या वास्तकर्मणि परित्यजेत् । क्रमेण मूत्राघातादिसप्तदोषभयात् । उच्चैरित्युच्छ्रिता शय्या पूर्वभागे । एव हि मूत्राघातः । अवाक्शिरस्त्वेनौषधस्यातिसप्राप्तिः । न्युब्जत्वेनावाङ्मुखत्वेनौषधस्य स्वानाप्राप्ति । सङ्कुचिताङ्गत्वेन साधुना मार्गेणौषधस्यानागति. । अथवा साधु कृत्वा गमन न भवति । स्थिते निषण्ण उपविष्ट आशु शीघ्र वस्ते प्रतिनिवर्तन उत्ताने मरुत्कोप । दक्षिणपार्श्वेन स्थितस्य पक्काशयस्य तृप्ति । अत्र शय्यादोषेषु सर्वेषु हि नेत्रादिदोषेषु च यथौपयिक यथोपयोगि चिकित्सित विधातव्यम ॥

सवातातिद्रुतोत्क्षिप्ततिर्यगुल्लुप्तकम्पिता ।
अतिमन्दकवाह्यातिवेगदोषाः प्रणेतृत. ॥

सवातादयो दश दोषा प्रणेतृतो वस्तियोजकादुत्पद्यन्ते । उल्लुप्त उन्मुक्त ॥

अनुच्छ्वास्य तु बद्धे वा दत्ते नि शेष एव वा
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ॥
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ।

अनुच्छ्वास्य वन्धादिना वस्तावन्तर्वायु क्षुभितस्तत्काल शूलतोदकरो भवेत् । तत्र वातेन सशूलादिके अभ्यङ्गादिक योज्यम् ॥

द्रुत प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात् कटीगुदजङ्घोरुवस्तिस्तम्भार्तिभेदनम्
भोजन तत्र वातघ्न स्वेदाभ्यङ्गा सवस्तय ।

अतिद्रुत नेत्रे प्रणीते वा निष्कृष्टे वा कटिस्तम्भादिक स्यात् । तथा सहसा झटित्युत्क्षिप्ते नेत्रे कटिस्तम्भादिक स्यात् । उभयत्रापि वातघ्नभोजनादिकमौषधम ॥

तिर्यग्वल्या वृते द्वारे बद्धे वापि न गच्छति ॥
नेत्रे तदृजु निष्कृष्य सशोध्य च पुनर्नयेत् ।

तिर्यक्प्रणिहिते नेत्रे नेत्रद्वारे यदा वल्यावृतत्वादौषधमन्तर्न गच्छति तिर्यग्वा बद्धे वस्तावेव भवति । बद्ध रुद्धमार्ग नेत्रम् । उभयत्रापि त नेत्र ऋजु कृत्वा यथैव प्रविष्ट तथैव निष्कृष्य सशोध्य च पुनर्गुद नयेन्नेत्रम् ॥

पीड्यमानेऽन्तरामुक्ते गुदे प्रतिहतोऽनिल ॥
उर शिरोरुज सादमूर्वोश्च जनयेद्बली ।
वस्ति स्यात्तत्र बिल्वादि फलश्यामादिमूत्रवान्

पीड्यमानो वस्तिर्यदान्तरा शिथिलहस्तत्वादुन्मुक्तो भवति तदा तेनौषधेन प्रतिहतोऽनलो बलवानुरोरुजादिक जनयेत् । तत्र बिल्वादिपञ्चमूलमदनफलश्यामादिगणवान् बस्तिः स्यात् ॥

मानयानम् । अतिचङ्क्रमणम् । अजीर्णभो जनम् । अहिताशनम् । दिवास्वप्नः । व्यायाम इत्यष्टौ । तेभ्यो भवेयुरशिरोरोगादयो वा तदुपजाः । तत्र चिकित्साभ्यङ्गादिकम् । अधोभक्त भोजनान्ते स्नेहोपसेवनम् । मौन वाग्यम । यथास्व रोगेषु विकारजिद्विधिश्च ॥

अत्यास्यायानयानाभ्यां शिरोरुग्धमपूर्धनिश्चादिरुक्
अतिचङ्क्रमणात् पादजङ्घोरुमदरुग्ग ।
तेषां वातहरं सर्व स्नेहस्वेदादिशस्यते ।
अजीर्णभोजनादामविषच्छर्दिज्वरादयः ।
तत्र मात्राशितीयोक्तो विधयो विधिरामहा ॥
अहिताशाद्यथादोषं रोगाः स्युर्भेषजानि च ।

अत्यास्यातो यानयानाद्य स्कन्धादिरुक् । अतिचङ्क्रमणात् पादरुगादयः । तेषां संधिरुगादीनां स्नेहस्वेदादि वातहरं शस्यते । अजीर्णभोजनादामादयः । तत्रेत्यादि सुबोधम् । अपथ्यभोजनादपथ्यगुणानुगुण्यं दोषकोपाद्रोगोद्भवः । तेषु च भेषजानि यथादोषमेव ॥

हलीमकादयः प्रोक्ता दिवास्वप्नात् पुरा गदा
विदध्यात् कफजित्तेषु धूमरूक्षान्नलङ्घनम् ॥

दिवास्वप्नाद्धलीमकादयो गदाः पुरा विरुद्धान्नविज्ञानीये अहितनिद्रया ये प्रोक्ताः । तेषु हलीमकादिषु धूमादिकं कफजिद्विदध्यात् ॥

व्यवायाज्जीवितभ्रंशस्तैस्तैरस्यानिलामयैः ।
गुदोऽवलुप्यत इव भ्रमतीव च चेतना ॥

मेढ्रं धूमायति मनस्तमसीव प्रवेश्यते ।
जीवनीयशृतक्षीरसर्पिषोरुपसेवनम् ॥
आहारो बृंहणस्तत्र हृद्यास्ते ते च वस्तयः ।

व्यवायादस्य वस्त्युपयोगिनस्तैस्तैरनिलामयैर्वातव्याधिभिर्नानाविधैर्जीवितभ्रंशः स्यात् । अवलुम्पनं छेदनम् । चेतना संवित् । मनश्चित्तम् । तत्र जीवनीयगणसिद्धस्य क्षीरस्य सर्पिषश्चोपसेवनम् । आहार इत्यादि सुबोधम् ॥

वेगरोधोर्ध्ववातत्वात् प्रागुक्ता ये सदातुराः ।
तेषां विबद्धे पवने सर्वदेहोपतापिनि ॥
फलवर्तिं पुरा दद्यादथ वस्तिं चलापहम् ।

प्राक्सूत्रस्थाने वमनविरेचनविधौ । स्त्रियो राजसमीपस्था वणिजश्च जयेत्सदा इत्युक्तास्तेषां वेगरोधेनोर्ध्ववातत्वात्सकलदेहोपतापिनि पवने विबद्ध इत्थमिदं कुर्यात् । आदौ फलवर्तिस्ततः प्रवृत्ते मले चलापहं वस्तिं दद्यात् । किमित्याह ॥

निकुम्भकुम्भाग्न्युरुपूगधावनी
पुनर्नवं दारु महच्च पञ्चकम् ।
फलं च मूत्रे कथितं समस्तु तत्
घृतं सतैलं लवणानि पञ्च च ॥

निरूहितं धन्वरसेन भोजये-
न्निकुम्भतैलेन ततोऽनुवासयेत् ।

निकुम्भादिक्वाथो मस्तुना समो घृतादिकं च । अनेन निरूहितं धन्वमांसरसेन च भोजयेत् । भुक्ते च दन्तीतैलेनानुवासयेत् ॥

गनयानम् । आतिचङ्क्रमणम् । अजीर्णभोजनम् । अहिताशनम् । दिवास्वप्नः । व्यायाम इत्यष्टौ । एभिर्भाव्यान्छिरोरोगादयो वा तत्कोपजा । तत्र चिकित्साभ्यङ्गादिकम् । अधोभक्त भोजनान्ते स्नेहोपसेवनम् । मौन वाग्यम । यथास्व रोगेषु विकारजिद्विधिश्च ॥

अत्यास्यायानयानाभ्यासान्धिमूर्धत्रिकादिरुक्
अतिचङ्क्रमणात् पादजङ्घोरुमर्दनादय ।
तेषां वातहर सर्व स्नेहस्वेदादिजस्यत ।
अजीर्णभोजनादामविपन्नार्दिज्वरादय ।
तत्र मात्राशितीयोक्ता विधयो विधिरागदा ॥
अहिताशाद्यथादोष रोगा. स्युर्भेषजानि च ।

अत्यास्याती यानयानाद्य स ध्यादिरुक् । अतिचङ्क्रमणात् पादादय । तेषा सन्धिरुगादीना स्नेहस्वेदादि वातहर शस्यते । अजीर्णभोजनादामादय । तत्रेत्यादि सुबोधम् । अपथ्यभोजनादपथ्यगुरुण्येन दोषकोपाद्रोगोद्भव । तेषु च भेषजानि यथादोषमेव ॥

हलीमकादय प्रोक्ता दिवास्वप्नात् पुरा गदा
विदध्यात् कफजित्तेषु धूमरूक्षानलङ्घनम् ॥

दिवास्वप्नाद्धलीमकादयो गदाः पुरा विरुद्धान्नविज्ञानीये अहितनिद्रया ये प्रोक्ताः । तेषु हलीमकादिषु धूमादिक कफजिद्विदध्यात् ॥

व्यवायाज्जीवितभ्रंशस्तैस्तैरस्यानिलामयैः ।
गुदोऽवलुप्यत इव भ्रमतीव च चेतना ॥
मेढ्र धूमायति मनस्तमसीव प्रवेश्यते ।
जीवनीयशृतक्षीरसर्पिषोरुपसेवनम् ॥
आहारो बृंहणस्तत्र वृष्यास्ते ते च बस्तय ।

व्यवायादस्य वस्त्युपयोगिनस्तैस्तैरनिलामयैर्वातव्याधिभिर्नानाविधैर्जीवितभ्रंश. स्यात् । अवलुम्पन छेदनम् । चेतना सवित् । मनश्चित्तम् । तत्र जीवनीयगणसिद्धस्य क्षीरस्य सर्पिषश्चोपसेवनम् । आहार इत्यादि सुबोधम् ॥

वेगरोधोर्ध्ववातत्वात् प्रागुक्ता ये सदातुरा. ।
तेषा विबद्धे पवने सन्देहोपतापिनि ॥
फलवर्ति पुरा दद्यादथ बस्ति चलापहम् ।

प्राक्सूत्रस्थाने वमनविरेचनविधौ । स्त्रियो राजसमीपस्था वणिजश्च जयत्सदा इत्युक्तास्तेषा वेगरोधेनोर्ध्वगतत्वात्सन्देहोपतापिनि पवने विबद्ध इवमिव कुर्यात् । आदौ फलवर्तिस्तत प्रवृत्ते मले चलापह बस्ति दद्यात् । किमित्याह ॥

निकुम्भकुम्भाग्न्युरुपूगधावनी-
पुनर्नव दारु महच्च पञ्चकम् ।
फल च मूत्रे कथित समस्तु तत्
घृत सतैल लवणानि पञ्च च ॥
निरूहित धन्वरसेन भोजये-
न्निकुम्भतैलेन ततोऽनुवासयेत् ।

निकुम्भादिक्वाथो मस्तुना समो घृतादिक च । अनेन निरूहित धन्वमासरसेन च भोजयेत् । भुक्ते च दन्तीतैलेनानुवासयेत् ॥

बलां सरास्नां फलबिल्वचित्रकान्
द्विपञ्चमूलं कृतमालकात् फलम् ॥
यवान् कुलत्थांश्च पचेज्जले रसः
समुस्तपाठेन्द्रयवैश्च कल्कवान् ।
सतैलसर्पिर्गुडसैन्धवो हितः
सदातुराणां बलपुष्टिवर्णदः ॥
तथानुवास्यं मधुकेन साधितं
फलेन बिल्वेन शताह्वयाथवा ।
सजीवनीयस्तु रसोऽनुवासने
निरूहणे चालवणः शिशोर्हितः ॥

बलादिकं जले पचेत् । रसो मुस्तादिकल्कवान्तैलादियुक्तश्च सदातुराणां क्षीराजसमीपस्थवणिजां बलादिप्रदो वस्तिः स्यात् । मधुकाद्यन्यतमसाधितं तैलं तेषामनुवास्यमनुवासने साधु । शिशोर्निरूहेऽनुवासने च सजीवनीयद्रव्यो मांसरसो हितः । उभयत्राप्यलवणः । प्रसङ्गेनाह ॥

निरूहवस्तेर्नैवान्यत् पथ्यं स्थविरबालयोः ।
बलाद्रव्येन शीघ्रमार्तो योजयेदतः ॥

इति कल्पस्थाने सप्तमोऽध्यायः ॥

बालस्य स्थविरस्य च निरूहवस्तेरन्यत् किञ्चिन्नैव पथ्यम् । अतस्तमेव बलवर्धनमग्निवर्धनं चार्तः सन् शीघ्रं योजयेत् ॥

इतीन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां कल्पस्थाने सप्तमोऽध्यायः ॥

---

# अष्टमोऽध्यायः ।

---

कल्पनाप्रसङ्गसामान्येन भेषजानां कल्पनां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो भेषजकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

जाङ्गले साधारणे वा देशे यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणोदके श्मशानचैत्यदेवयजनागारसभाश्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्धकृष्णसुवर्णमधुरसुरभिमृत्तिके मृदावफालकृष्टेऽनुपहतेऽन्यैर्बलवत्तरैर्द्रुमैर्भेषजानि प्रशस्यन्त इति सामान्यतो भूमिपरीक्षा ॥

प्रथममेव जाङ्गल इत्यादिना भेषजानां सामान्येन भूमिपरीक्षा आकरनिर्णयः । जाङ्गलादिके जातानि भेषजानि प्रशस्यन्ते । यथाकालं कालानतिक्रमेण शीतातपादिसेविते देशे श्मशानादिविरहिते । चैत्यं प्रसिद्धम् । ग्रामादृहिर्वा महान् वृक्षश्चैत्यः । देवागारं यजनागारश्च । सभा राजनिवेशः । श्वभ्रमवटः । आरामः क्रीडावनिः । वल्मीकः पिपीलिकाद्याणुः । ऊषरं दग्धभूप्रदेशः । रोहिषः कुशविशेषः । स्निग्धादि मृत्तिकाविशेषणम् । फालः दारुमयो लाङ्गलम् ॥

अश्मवतीत्यादिना पार्थिवादिविशेषेण भूमिपरीक्षा ॥

विशेषतस्तत्रश्मवतीस्थिरा गुर्वी श्यामा कृष्णा स्थूलतृणवृक्षसस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतलासन्नोदकास्निग्धतृणसस्यकोमलवृक्षप्राया शुक्लाचाम्बुगुणभूयिष्ठा । नानावर्णलघ्वलपुष्पवती प्रविरलपाण्डुवृक्षप्ररोहाग्निगुणभूयिष्ठा । रूक्षा रासभभस्मवर्णारूक्षतनुकोटरवृक्षप्रायाल्परसप्ररोहानिलगुणभूयिष्ठा । मृद्वीसमा श्वभ्रवत्यव्यक्तरसजला महापर्वतवृक्षा श्यामा चाकाशगुणभूयिष्ठा । तत्राम्बुपृथिवीगुणभूयिष्ठासु भूमिषु जातानि विरेचनानि बृंहणानि च शस्यन्ते । अनलानिलाकाशगुणभूयिष्ठासु वमनानि । सर्वगुणयुक्तासूभयतोभागानि । आकाशगुणभूयिष्ठासु शमनानि । एवं बलवत्तमानि भवन्ति ॥

साश्मवत्वादिगुणा भूमिः स्वगुणभूयिष्ठा पार्थिवगुणाधिकेत्यर्थः । तत्र हि यज्जायते तत् पार्थिवगुणाधिकं भवति । एवं सर्वत्र । स्निग्धादिगुणाम्बुभूयिष्ठा । नानावर्णादिगुणाग्निगुणभूयिष्ठा । रूक्षादिकानिलभूयिष्ठा । रासभो गर्दभः । कोटरो वृक्षान्तर्गतप्रायम् । अल्परस प्ररोहे यस्याः । श्वभ्रवत्यादिका आकाशभूयिष्ठा । तत्राम्बित्यादि सुबोधम् । एवमित्युक्तेन प्रकारेण भूमिविशेषे ॥

तत्रेत्यादिना भेषजस्वरूपम् ।

तत्र यानि कालजान्युपगतसंपूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्निसलिलपवनजन्तुभिरनुपहतगन्धवर्णरसस्पर्शप्रभावाण्यवगाढमूलान्युदीच्यां दिशि स्थितानि । तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यम् । ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानाम् । शरदि त्वक्कन्दक्षीराणि । हेमन्ते साराणि । यथर्तु पुष्पफलम् ॥

कालजानि स्वे काले जातानि । उपगतानि संपूर्णानि प्रमाणादीनि येषाम् । कालादिभिरनुपहतानि गन्धादीनि येषाम् । अवगाढं दूरप्रविष्टं मूलं येषाम् । क्षेत्रं उदीच्या दिशि स्थितानि । तेषां कालजादिगुणसंपन्नानां शाखादिकमुपयोगि नवं वर्षासु वसन्ते वा ग्राह्यम् । ग्रीष्मे शिशिरे वा मूलानि तानि तु पूर्वेषु पर्णेषु शीर्णेषु नवेषु वा प्ररूढेषु । त्वगादीनि शरदि । साराणि हेमन्ते । पुष्पफलन्तु यथास्वमृतुषु ॥

अन्ये पुनराहुः सौम्यान्यौषधानि सौम्येष्वृतुष्वाग्नेयान्याग्नेयेषु । एवमव्यापन्नान्यापूर्णतररसवीर्याणि च भवन्ति ॥

अन्य इत्यादि सुबोधम् । मधुरतिक्तकषायाणि सौम्यानि । शेषाण्याग्नेयानि । वर्षाशरद्धेमन्ताः सौम्याः । शेषास्त्रय आग्नेयाः ॥

अथ मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः संपूज्य च देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् । गृहीत्वा चानुरूपगुणवद्भाजनस्थान्यगारेषु पूर्वोत्तरद्वारेषु निवातप्रवाते-

कदेशेषु नित्यपुष्पोपहारबलिकर्मजरस्त्राग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पदामनभिगमनीयानि स्ववच्छन्नानि शिक्येष्वासज्य स्थापयेत् ॥

अथेत्यादिना भेषजग्रहणे विधि । गृहीत्वेत्यादिना स्थापनविधि । अनुरूप भाजन रसादिभेदेन शुष्कार्द्रादिविशेषेण च योग्य सकलम् । निवात एकदेश एकदेशः प्रवातो येषु वेश्मस अग्न्याद्यनभिगमनीयानीति भेषजविशेषणम । शिक्य लम्बरज्ज्वाधार ॥

तानि सक्षीराण्युपकल्पयेत् । तदसम्पत्तावनतिक्रान्तवत्सराणि । पुराणानि तु पिप्पलीविडङ्गगुडमधुघृतानि ॥

तानीत्यादि सुबोधम् । सक्षीराणामप्राप्तावनतिक्रान्तवत्सराणि । पिप्पल्यादीनि पुराणानि ॥

अपि च ॥

क्षीर बाष्कयण ग्राह्य विण्मूत्र तच्च नीरुजाम्
वयोबलवता धातुपिञ्छशृङ्गखुरादिकम् ॥

बष्कयणी चिरप्रसूता तस्या सत्रनिध क्षीर ग्राह्यम् । विण्मूत्र तथेति क्षीर नीरुजा प्राणिना ग्राह्यम् । धात्वादिक वयस्विना बलवता च सबन्धि ग्राह्यम् । धातवो मासादय । पिञ्छ बर्हसहति । आदिग्रहणेन केशलोमचर्मनखादिग्रहणम् ॥

पञ्चविधस्तु भेषजाना कषायकल्प । निर्यास कल्को निर्यूह शीत. फाण्टश्च । ते यथापूर्व बलिन ॥

सर्वेषा च भेषजाना निर्यासादिभेदेन पञ्चविध कषायकल्पो भवति । त इति फाण्टाच्छीतो बलवान । शीताच्छृत । शृतात् कल्क । कल्कान्निर्यास इति ॥

तत्रेत्यादिना निर्यासादीना क्रमेण लक्षणमुच्यते ॥

तत्र सद्यःसमुद्धृतप्रक्षालितक्षुण्णस्य तान्तवनिष्पीडितस्य स्वरसो निर्यास. । दृषलदृशनादिपिष्टस्तु कल्कः । शुष्कपिष्टः सूक्ष्मतान्तवपटच्युतश्चूर्ण । तस्य समस्तद्रव्यापरित्यागादाप्लुतोपयोगाच्च कल्काद्भेद । क्वाथो निर्यूह ॥

सद्य.समुद्धृतादिगुणस्य य स्वरस स निर्यास । उपलादिपिष्ट कल्क इत्युच्यते । दशनग्रहणेनापिष्टस्यापि भक्षितस्य कल्केऽन्तर्भाव उक्त । शुष्कपिष्ट सूक्ष्मच्छिद्रात्तान्तवात् पटाच्युतश्चूर्ण इत्युच्यते । स तु कल्क एव । समस्तद्रव्यापरित्यागादिना कल्केरूपता । तत्र शुष्कोपयोगिना चूर्णाना कल्कान्तर्भावे समस्तद्रव्यापरित्यागो हेतु । आलोडितोपयोगादुभयमपि । क्वाथो निर्यूह इत्येकोऽर्थः ॥

तत्रेत्यादिना निर्यूहस्य पाकविधि ॥

